१ शमानप्रकरणम्

अथ यजुस्संहितायामाकारप्लुतपूर्वो घोषवद्व्यञ्जनशसकारपरो विसर्जनीयो येषु पदेषु लुप्यते तानि प्रवक्ष्यामि १

अत्रेङ्ग्यपदानां नानापदत्वमसङ्ख्याने । तेषां पूर्वपदमवग्रहः २

ऊष्मविसर्जनीयप्रथमद्वितीयो अघोषाः । न हकारः ।
व्यञ्जनशेषो घोषवान् । गजडाद्यास्त्रयो वर्णाः दादयश्चैव बादयः । यादि वान्तो हकारश्च शसौ तावन्यसंयुतौ ॥

अघ्निया अयक्ष्मा अग्रा अप्रा असुरा अपृणा अजायथा अश्वा अह्रणीयमाना अधा अस्मेरा अनिष्टा अना गृहीता अध्वर्तव्या अकामा अक्लृप्ता अपुष्पा अस्या अनागा एत्यमेध्या अतिरिक्ता अमुष्या अपस्या असपत्ना अवका अजनिष्ठा अहता अवोचथा अन्तमा अतिष्ठिपा अनभ्यक्ता अह्निया बस्तेनाजा अनीका अर्धाः ३

वदन्तीम् सम् यतना अन्याः ४

अरिष्टास्स्यापरः ५

आयुधा आनशाना आताना आरण्या आग्नेया आद्या आसीनाः ६

आदित्याः ७ न वपेत्पूर्वः ८ आशाः ९ न नःपरः १० आतृण्णा

दजपरः ११
स्थेषा इरा इष्टा इष्टका इच्छमाना इमा म इयक्षमाणा
जोषसेमा इषिता अनपेता स्ता इमाः १२ ईश्वराः १३
उपस्था उस्रिया अखाया उपयामा उक्थ्या उषाः १४ ऊषाः १५
ऋध्या ह्यृता ऋतव्याः १६
एताः १७ एना अनन्तोदात्तः १८ ऐन्द्रा ऐलबृदाः १९ ओजा
ओताः २०
यानाऽसितवर्णास्सव्वँथ्सरीणा एता उ हिरण्यवर्णा एतासु २१
कृत्तिका मयुरादयस्त्रयः त्रैंशकद्वितीयदशिन्यः न वा एतेषु
२२
न त्वाऽऽर्द्राऽर्यमा सविता चित्रा श्रोणा पूषा २३
अवग्रहोपसर्गौ दिव्यनामपूर्वो देवता २४
संख्यापूर्वश्च धा नित्यम् २५ स्युः स्थ भवन्ति भवन्तु परः
बहुधेति वर्जयित्वा २६
कामा स्स्वाहाकृता कल्पमाना कण्ठा कुमारा क्रव्या क्लृप्ता
केशा क्षुल्लका क्षाः २७
गर्भा गता गृह्या गणा ग्रहा गृहा ग्रीवा ग्या गन्धर्वा
वरुणगृहीता ग्राह्या ग्रहीतव्या गाः २८
न स्वपूर्वः २९ चन्द्रमाश्चक्षाश्चन्द्राश्चेताः ३० छन्दाः ३१
जाता जोषा जुषाणा जनीना जागता ज्येष्ठा जना जायमाना

ज्याया जाया ज्ञाता जीवा जाः ३२
नैतस्मादा पञ्चमपरपदाद्यत्र पशवोऽस्ति ३३ मामा स्यात्
भवति हि जायते यत् मे ज्योतिःपरश्च ३४
मधुमत्तमास्तेजास्तृप्तास्तण्डुला
अनुतप्यमानास्तस्करास्तुषास्तन्वानास्त्वाष्ट्राः ३५
तरा नाकसत्परः ३६ ताः ३७ न जोहवीमि परि सोमस्य वृणे
सर्वेवोग्रा स्थ पूर्वः ३८
दुर्या देवा दक्षा दात्रा दा दूता दन्दशूका अवान्तरदिशा देविका
ददाना दोहा दन्ता द्विदेवत्या कामदुघा दक्षमात्मन्दधाना
म्रक्षासस्ते दिव्या देवताः ३९
न क्षेपिष्ठैतस्य पूर्वः ४० युक्ता गमयेत् गमयति नीयन्ते
विभजति ब्राह्मणं परो दक्षिणाः ४१
चन्द्रपूर्वश्च ४२ विधृता धावा धिष्णिया धीरा धाया धाना
धुवाना धृष्या वैधिषणा धाः ४३
न श्रद्विपूर्वः ४४ धाराः ४५ नैषापूर्वः ४६ नेत्रा नमस्या नवेदा
नवग्वा नभाः ४७
पुरूरवाः पाः प्रीताः पार्याः प्रजाः पुरुषाः पाङ्क्ताः पत्याः पन्थाः
पोषाः पुराणाः प्रजाताः प्रावृताः पादाः प्रथाः पूताः देवपुराः पात्राः
पुरोडाशाः पवमानाः प्रायणाः पद्याः पृथिव्याः
४८ नैवपूर्वः ४९ इमे अलज एतयोश्च ५० प्रिया मा स्मः परः ५१

पृतना जपरः ५२ फालाः ५३
ब्राह्मणा बाह्याः ५४ भामा भारा भरता भक्षा भूया भूम्या
भित्था भद्रा भ्रातृव्या भक्ता भूयिष्ठाः ५५
भागा अनाज्यपूर्वः ५६ तमामन्द्रा मित्रा मनस्यमाना मनुष्या
मुखा मना सुमेधा मान्दा मासा मुञ्चमानाश्चमाया मुदा
मथ्नाना मिश्रा मेध्या मुष्करा मेघ्या मरुत्वतीया मुख्या
निष्परिमिताः ५७
यज्ञा यक्ष्मा यज्ञिया याजा यशा यजमाना युक्ता अयनीयस्य
याज्या यतनाः ५८
स्त्रियो वै वः प्रियाः जाताः वो देवाः रुचो दक्षिणा गर्भं न इमा
द्वितीया दश देवेषु परो याः ५९
रिहाणा रेता रथा मुञ्चामिरशना रण्वा रक्षमाणा रौद्रा रजता
रात्रिया रवा रूपाः ६०
न वशा परः ६१ रुद्रा अनिङ्ग्यान्तः ६२ लिम्पा लोकाः ६३ न
पश्चात्पूर्वः ६४
वल्शा विक्था विप्रा वेदा वया वीरा व्राता वसव्या वर्चा वसिष्ठा
व्यचा वैश्वानरा वेशा वरत्रा वाता विदाना सव्रता विद्या वैष्णवा
वयस्या एकव्रताः ६५
यो हि भुवः परो याज्यासु विश्वाः ६६
शस्त्याः शुद्धाः शुक्राः श्रवाः शुष्काः शर्मण्याः कविशस्ताः

श्लोकाः शफाः शुभ्राः श्रेष्ठाः शराः ६७
सर्पाः कृतस्स्योनाः शतसाः सहस्रसाः सोम्याः निषत्ताः
सत्यावः स्तेनाः सस्पिञ्जराः सिकताः सीसाः स्थिताः
स्यन्दमाना प्लुतसोमाः त्रिषत्याः आहसौम्याः स्थावराः
स्परणाः स्तोमाः सृष्टाः स्तुताः सोमपीथाः स्थाः ६८
न प्रतिपूर्वः ६९ स्थिरा अनवपूर्वः ७० अनृक्षु साध्याः ७१ सर्वाः ७२ न वै परः ७३ हिमा होतव्या हाया हायना हारुका होत्राः ७४ न दे परः ७५ हूताः मकारपरः ७६
इति शमानप्रकरणम्